॥ केतुस्तोत्रम् ॥

अथ केतुस्तोत्रप्रारम्भः ।
ॐ अस्य श्री केतुस्तोत्रमहामन्त्रस्य वामदेव ऋषिः ।
अनुष्टुप्छन्दः । केतुर्देवता ।
केतुप्रसादसिद्ध्यर्थे जपे विनियोगः ।
गौतम उवाच ।
मुनीन्द्र सूत तत्त्वज्ञ सर्वशास्त्रविशारद ।
सर्वरोगहरं ब्रूहि केतोः स्तोत्रमनुत्तमम् ॥ १॥

सूत उवाच ।
शृणु गौतम वक्ष्यामि स्तोत्रमेतदनुत्तमम् ।
गुह्याद्गुह्यतमं केतोः ब्रमणा कीर्तितं पुरा ॥ २॥

आद्यः कराळवदनो द्वितीयो रक्तलोचनः ।
तृतीयः पिङ्गळाक्षश्च चतुर्थो ज्ञानदायकः ॥ ३॥

पञ्चमः कपिलाक्षश्च षष्ठः कालाग्निसन्निभः ।
सप्तमो हिमगर्भश्च् तूम्रवर्णोष्टमस्तथा ॥ ४॥

नवमः कृत्तकण्ठश्च दशमः नरपीठगः ।
एकादशस्तु श्रीकण्ठः द्वादशस्तु गदायुधः ॥ ५॥

द्वादशैते महाक्रूराः सर्वोपद्रवकारकाः ।
पर्वकाले पीडयन्ति दिवाकरनिशाकरौ ॥ ६॥

नामद्वादशकं स्तोत्रं केतोरेतन्महात्मनः ।
पठन्ति येऽन्वहं भक्त्या तेभ्यः केतुः प्रसीदति ॥ ७॥

कुळुक्थधान्ये विलिखेत् षट्कोणं मण्डलं शुभम् ।
पद्ममष्टदळं तत्र विलिखेच्च विधानतः ॥ ८॥

नीलं घटं च संस्थाप्य दिवाकरनिशाकरौ ।
केतुं च तत्र निक्षिप्य पूजयित्वा विधानतः ॥ ९॥

स्तोत्रमेतत्पठित्वा च ध्यायन् केतुं वरप्रदम् ।
ब्राह्मणं श्रोत्रियं शान्तं पूजयित्वा कुटुम्बिनम् ॥ १०॥

केतोः कराळवक्त्रस्य प्रतिमां वस्त्रसंयुताम् ।
कुम्भादिभिश्च संयुक्तां चित्रातारे प्रदापयेत् ॥ ११॥

दानेनानेन सुप्रीतः केतुः स्यात्तस्य सौख्यदः ।
वत्सरं प्रयता भूत्वा  पूजयित्वा विधानतः ॥ १२॥

मूलमष्टोत्तरशतं ये जपन्ति नरोत्तमाः ।
तेषां केतुप्रसादेन न कदाचिद्भयं भवेत् ॥ १३॥

इति केतुस्तोत्रं सम्पूर्णम् ।